# श्रीमद्भागवतकथासूचीपत्रम् ।

## पञ्चमः स्कन्धः ।

अध्यायाः विषयाः

| अध्यायाः | विषयाः |
|---|---|
| २१ | पूर्वोक्तयोगत्रयानधिकारिणां कामिनां द्रव्यदेशादीनां गुणदोषा दर्शिताः। |
| २२ | तत्त्वानां मतान्तरेणाविरोधः पुंप्रकृत्योर्विवेको जन्ममृत्युविधा चोच्यते। |
| २३ | कदर्याख्यानेन तिरस्कारसहनं भिक्षुगीतेन धिया मनसः संयम उदीर्यते। |
| २४ | आत्मनः भावानामागमापायाचिन्तया सांख्ययोगेन मोहो निवार्यते । |
| २५ | आत्मनैर्गुण्यज्ञानलाभाय चित्तसत्त्वादिवृत्तीरनेकधाऽकथयत् । |
| २६ | दुष्टसङ्गेन योगनिष्ठाविघातः साधुसङ्गेन तत्प्राप्तिरित्यैलगीतेन वर्ण्यते । |
| २७ | सद्यश्चित्तप्रसादकः सर्वकामाप्तिहेतुश्च क्रियायोगः साङ्गः प्रोक्तः । |
| २८ | पूर्वं विस्तरेणोक्तो ज्ञानयोग एव सौकर्यार्थं पुनः संक्षेपेण निगद्यते । |
| २९ | पूर्वं विस्तरेण प्रोक्तं भक्तियोगं संक्षेपेण स्वभक्ताय हरिरकथयत् । |
| ३० | स्वधाम गन्तुमिच्छन् हरिर्मौसलापदेशेन स्वकुलं संजहार । |
| ३१ | स्वधाम्नि प्रविष्टे हरौ तमनु वसुदेवादयो देहान् जहुरिति वर्णितम् । |

## द्वादशः स्कन्धः।

| अध्यायाः | विषयाः |
|---|---|
| १ | मागधान्वये कलिना मलीमसान्तःकरणा भाविनो राजानो निर्दिष्टाः । |
| २ | कलिदोषवृद्धौ भगवता कल्क्यवतारेणाधार्मिकाणां नाशे पुनः कृतयुगागमः । [ निर्दिश्यते । |
| ३ | राज्ञां मोहादिवर्णनं तथा दोषभूयिष्ठे कलौ दोषहन्त्री हरेः स्तुति- |
| ४ | नैमित्तिकः प्राकृत आत्यन्तिको नित्य इति चतुरः प्रलयान् प्रदर्श्य तन्निस्तारे भगवत्कथेति सिद्धान्तितम् । |
| ५ | परीक्षितः परब्रह्मोपदेशेन तक्षकसन्दंशाद्भयनिवारणम् । |
| ६ | परीक्षितो मोक्षस्तत्पुत्रस्य सर्पसत्रं तथा व्यासेन वेदविभागश्च तथा गुर्ववज्ञया याज्ञवल्क्यः सूर्यमाराध्य वेदं लेभे । |
| ७ | अथर्ववेदविस्तारस्तथा पुराणलक्षणादि भागवतश्रवणफलं च निगद्यते । |
| ८ | तपसि तिष्ठतो मार्कण्डेयस्य कामादिभिरसंमोहः । तथा तत्समाद्यर्थमागतयोर्नरनारायणयोः स्तुतिः । |
| ९ | भगवन्मायादिदृक्षोर्मुनेर्मिथ्याप्रलयदर्शनेन प्रलयाब्धौ वटपत्रस्थस्य शिशुभूतस्य भगवतो मुखे प्रवेशनिर्गमौ च कथितौ । |
| १० | शिव आगत्य मार्कण्डेयाय वरमददात् तेन सह प्रीतिमकरोत् । |
| ११ | उपासनासिद्ध्यै महापुरुषवर्णनं तथा रवेः प्रतिमासं व्यूहकथनम् । |
| १२ | भागवतोक्तार्थानां यथाक्रमं संक्षेपेण कथनम् । |
| १३ | पुराणप्रतिपाद्यं देवं नमस्यन्नष्टादशपुराणग्रंथसंख्यां चाकथयत् । |

**इति श्रीमहाभागवतसूचीपत्रं समाप्तम् ।**

॥ श्रीगणेशाय नमः ॥ आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन्पदेऽस्तु मम चित्तमगोचरेऽपि ॥ यत्सद्व्रजस्थितिजुषां[1] सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥ नानाविधान्यपि मतानि परःशतानि यत्रैकभावमुपयान्ति विहाय वादम् ॥ तच्चिन्मयं परतरं सकलावलम्बं वन्दे महः किमपि भागवतैकवेद्यम् ॥ २ ॥ यावन्निरञ्जनमजं पुरुषं जरन्तं संचिन्तयामि सकले जगति स्फुरन्तम् ॥ तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ ३ ॥ सद्वद्यपद्यमघहारिपदं[3] मनोज्ञस्कन्धं[4] सुदर्शनकरं[5] निजनन्दकं[6] च ॥ श्रुत्यादिभिर्बुधजनैरवबोध्यतत्त्वं[8] नारायणं भजत भागवताभिधानम् ॥ ४ ॥ नोत्पादिता[9] न च मनागपि पालिताः स्मः क्षान्तन्न नः किमपि नाम भवद्भिरागः ॥ तद्वोऽहह श्रमशतेन मुधैव देवाः सेवामहे प्रणमनानि च कुर्महे वा ॥५॥ लोका वृथा भ्रमथ पङ्ककलङ्कितेषु[10] तीर्थभ्रमाद्बहुविधेषु जलेष्वभीक्ष्णम्[11] ॥ निःशेषतापदुरितापनयाय मातापित्रोः सुखेन चरणं शरणं व्रजेत ॥ ६ ॥ श्रीरामसिंह इति बुन्दिनृपेषु रत्नमासीदसौ जयति संप्रति कीर्तिमूर्तिः ॥ यं स्वर्गभाजमतिसादरमीक्षमाणा देवाः पुरेव न सुरेश्वरमाद्रियन्ते ॥ ७ ॥ देवोत्तमोऽस्य[12] तनयो रघुवीरसिंहो यं मेघवाहन[13] उदश्चितधीरुपास्ते ॥ कोऽनेन साम्यमुपयास्यति लोकपालो[14] यो मेघवाहनपदे प्रणतिं विधत्ते ॥ ८ ॥ कारुण्यवारिनिधिबुन्द्यधिनाथदत्ताभ्युत्थानसत्कृतियुतस्थिरजीविकोऽस्मि ॥ धन्योऽस्मि को नु सदृशोऽस्ति मयेति जानन् हा निर्गतं न गणयामि वयो मदान्धः ॥ ९ ॥ षष्टिः समाः कुचरितैर्गमिता वृथैव नाद्यापि कापि हतचेतसि हन्त चिन्ता ॥ आसीदति प्रतिदिनं ननु वैतरण्यास्तीरं महाभयमवारमदृश्यपारम् ॥ १० ॥ गङ्गासहायजरठोऽहमपास्तधर्माचारोऽवशेषवयसि व्यथितो रुजाभिः ॥ ऋज्वीभिरन्वितपदाभिरनायताभिर्वाग्भिः परं शरणयामि[15] पुराणराजम् ॥ ११ ॥ व्याख्याय भागवतमन्वयवर्त्मनादौ वक्ष्ये पुनः स्फुटतदाशयबोधनाय ॥ नानामतानि विषयानपि तद्व्यवस्थां पर्यङ्कनाम्नि विवृतेरवशेषभागे ॥ १२ ॥ ये गूढतामुपगता बत नैव सूर्यालोकेऽप्यभासिषत[16] भागवतस्य भावाः ॥

---

१ निराकारपक्षे सतां ज्ञानिनां व्रजस्य समूहस्य स्थितिं ब्रह्मचिन्तनादिकां जुषन्ते तेषां सुष्ठुहृदयानां सनत्कुमारादीनां गोचरतां चित्तवृत्तिविषयतामुपैति । श्रीकृष्णपक्षे सद्रूपं यत्कृष्णाख्यं व्रजस्थितिजुषां व्रजवासिनां मित्राणां गोपकुमारादीनां दृग्गोचरतामुपैति । गोषु चरति तादृशतां वा सर्वमतानुकूलोऽयं श्लोकः । २ अत्राद्वैतपक्षे धामशब्दो देहवाची " गृहदेहत्विट्प्रभावा धामानि " इत्यमरः । तथा चानन्दस्वरूपे इति पर्यवसितोऽर्थः । ३ सद्भिर्गद्या कथनीया पद्या भक्तिमार्गो यस्य । सन्ति श्रेष्ठानि गद्यानि पद्यानि च यस्येति च । ४ पदं चरणं पदानि सुप्तिङन्तानि । ५ स्कन्धावंसौ स्कन्धा ग्रन्थावयवाश्च । ६ सुदर्शनचक्रहस्तं श्रेष्ठज्ञानकरं च । ७ निजः स्वीयो नन्दकः खड्गो यस्य तं निजानां श्रोतॄणां हर्षकं च । ८ बुधजनैः कर्तृभिः श्रुत्यादिभिर्वेदपुराणादिभिः श्रवणचिन्तनादिभिश्चावबोध्यं तत्त्वं स्वरूपमभिप्रायश्च यस्य । ९ नोत्पादिता इत्यत्र देवोपालम्भमुखेन मातापित्रोः स्तुतिः तथा च याभ्यामुत्पादिताः पालिता अपराधाश्च सोढास्तयोः सेवाप्रणामादि कार्यम् । १० पङ्कः कर्दमः पापं च । ११ नीरेषु जडेषु च । १२ देवेषु राजसु सुरेषु चोत्तम इति विष्णुत्वं व्यङ्ग्यम् । १३ मेघवाहनस्तन्नामाऽमात्य इन्द्रश्च अग्रेप्यवम् । १४ लोकपालो नृपः वरुणादिश्च । १५ शरणशब्दात्तत्करोतीति णिच् । १६ सूरीणामालोचने सूर्यप्रकाशे च ।

यैस्तेप्यदर्शिषत दीपिकयैव ते मे श्रीश्रीधरा जडमतेः परमोवलम्बः ॥१३॥ प्राचां सुवर्णरचनां परिगृह्य भिक्षां भक्त्या तयार्चितवतः परमेशितारम् ॥ क्षीणस्य विप्लुतमतेर्जरठस्य विज्ञाश्चौर्यं न कल्पयत काञ्चनमार्गणां मे ॥ १४ ॥ ये दोषमेव गणयन्ति गुणे परेषां ते प्रार्थिता अपि कुतो जहति स्वशीलम् ॥ दोषेपि ये गुणधियः करुणाप्रधानास्तेऽप्रार्थिता अपि कुतो जहति स्वशीलम् ॥ १५ ॥ ननु पूर्वैः कृतासु बह्वीषु श्रीमद्भागवतटीकासु सतीषु किं तव टीकया दीप्यमानासु तरणिश्रेणिषु खद्योतपोतिकयेवेति चेत्सत्यम् । मया हि अन्वयक्रमेण प्रायः सर्वश्लोकार्थप्रदर्शिका नातिविस्तरा भागवतोपयोगिबहुविषययुक्ता अतिसुगमा च टीका स्वबोधायैवापेक्षिता। तादृशीमन्यां टीकामलभमानेन प्रायः पूर्वटीकाभ्यः किंचित्किंचिद्भिक्षित्वा इयमन्वितार्थप्रकाशिका नाम्नी टीका निर्मिता श्रीहरेश्चरणयोरर्पिता चेति । सा च विद्वत्प्रसादनायाऽक्षमापि भगवन्निवेदितवस्तुसेविभिस्तद्भक्तैरवश्यमङ्गीकरिष्यत एवेति तावतैव संतुष्टोस्मीति भैक्षरूपत्वान्न चौर्यद्रव्यं प्रायः कल्पित्वाभावान्नाप्रामाण्यशङ्का । यत्तु क्वचन मयापि स्वचापलं प्रकटितं तदपि मणिश्रेणौ काचशकलमिव हास्यहेतुत्वेन सतां विनोदावहमेवेति सर्वमनवद्यम् । व्याख्यानं चात्र प्रायः सर्वेषां श्लोकानां लिखितम् । ननु टीकान्तरेष्विव बहवः श्लोकास्त्यक्ताः । येषु श्लोकेषु नामगणनामात्रं स्यात् ये वा बालैरपि सुगमाः त एवात्र केचित् त्यक्ताः । अन्वयश्चात्र एकान्वयदण्डान्वयाद्यपरपर्यायो मल्लिनाथादिभिर्बहुभिरादृतः पिण्डान्वय एव नतु खण्डान्वयः । तत्र व्याख्यायमानानां मूलपदानामर्थादि परित्यज्य टीकाधृतक्रमेण योजने पृथगप्यन्वयो भवेत् । सर्वत्र विशेषणानन्तरं विशेष्यम् उद्देश्यविधेयभावे विशेष्यं पूर्वम् अन्वयेर्थलभ्या यत्तत्तथादयोपि यथोचितमत्र लिखिता ग्राह्याः । उपमाविषये प्राय एकवाक्यमेव भवति । तत्र स्पष्टप्रतिपत्तये उपमानार्थः क्वचित्पृथक् क्वचिदेकत्र वाक्ये एव व्याख्यातः । क्वचित्कठिनश्लोकेन्वयः पृथगादौ लिखितः । अत्र प्रायः एकैकस्य श्लोकस्यैव पृथगन्वयः । तदन्यस्थले तु अर्द्धं सार्द्धं द्वयमित्यादिस्फुटं लेखः । अनेकेषां श्लोकानामेकान्वयस्थलेपि सति संभवे प्रायः पृथगन्वय एव सुगमतायै करिष्यते । पञ्चमस्कन्धगद्यानां प्रायोन्वितत्वात्तत्र क्वापि मूलपदानि त्यक्तानि । यद्यपि कस्यापि मतस्य पक्षपातो विरोधश्च नास्माकमभीष्टस्तथापि अत्रान्वयोर्थश्च सर्वत्र बहुप्रसिद्धत्वात् प्रायः श्रीधरस्वामिपादानुसारेणैव लिखितः। क्वचिदन्यथापि क्वापि मतान्तरेणार्थान्तरमपि लिखितम् । टीकान्तरेष्वन्वयक्रमे विशेषणादीनां हेतुहेतुमद्भावप्रदर्शनं शङ्कासमाधानरीत्या पदानां सार्थकतासमर्थनं तदनुरोधात्पाठक्रमानादरश्च बहुषु स्थलेषु क्रियते । अत्र तु विस्तरभयादनावश्यकत्वादनैयत्यात्प्रायःशब्दमर्यादया तदलाभाच्च न तथा नियम इति बोध्यम् । आहेत्यस्याग्रे भूतकालद्योतनाय स्मशब्दलेखः । वै इत्यादीनां पादपूरणार्थानामव्ययानां प्रायोन्वये त्यागः । यत्रैकत्रार्थेन्विता बहवः पदार्थाः समुच्चितास्तत्र तेषां प्रायः प्रथमशब्दादग्रे आदिशब्दस्य लेखः । अग्रे च तत्र ये व्याख्येयास्तेषामेव लेखो न सर्वेषाम् । यथा " ऋषयो मनवो देवा मनुपुत्रा महौजसः " इत्यत्र ऋष्यादय इत्येव लेखः । मनुदेवमनुपुत्राणां न लेखः ।

१ दीपिकाख्यटीकया ह्रस्वदीपेन च । २ सुष्ठु वर्णानां रचनां हाटकरचनां च । ३ कामपि भिक्षावृत्तिं सुवर्णयाचनं च ।

" चक्रशङ्खासिचर्मेषुधनुःशूलगदाधरः । " इत्यत्र चक्राद्यष्टायुधधर इत्येव लेख इत्याद्यन्यदपि ज्ञेयम् । अत्र पुराणानां वेदसधर्मतया श्रीभागवतेपि लौकिकेष्वप्रयुक्ताः आर्षपदाभिलाप्या वैदिका बहवः प्रयोगाः सन्ति तत्संस्कारे बहूपयोगि सामान्यरूपं किंचिल्लिख्यते । उदाहरणानि चात्र पाठान्तरव्याख्यान्तरस्थान्यपि । तत्र " षष्ठीयुक्तश्छन्दसि वा " इत्यत्र वा इति योगं विभज्य छन्दसीत्यनुवर्त्तनीयम् । तेन " सर्वे विधयश्छन्दसि विकल्प्यन्ते " इति परिभाषा संपद्यते तेन " स्वर्धुन्यापोनुसेवया " अत्र समासान्तविकल्पात्तदभावपक्षः । एवं दुर्मेधान् इत्यादौ सर्वत्र समासान्ताभावस्थले बोध्यम् । एवं रिरक्षुः विवित्सामीत्यादौ सेटामनिट्त्वे इडभावपक्षः । "व्रजतीर्विरेजुः" इत्यादौ नुमभावपक्षः विकल्पश्चायं बाहुलकरूप एव । अत एवाहुः " बहुलं छन्दसि " इत्यादिरस्या एव प्रपञ्च इति । तेन क्वचित् सूत्रोक्तनिमित्तेषु कस्यचिदभावेपि कार्यम् । यथा "ध्येयः पूज्यश्च नित्यदा" इत्यादौ दाप्रत्ययः, "वर्णाश्रमविभागशः" इत्यादौ बहुषु स्थलेषु शस् प्रत्ययः। "धान्वन्तरं द्वादशमम्" इत्यादौ संख्यादेरपि मट् । "अल्पमेधस" इत्यादौ नञ्दुःसुभ्यो विनापि असिच् । "दुहन्तीं निशि गाम्" इत्यादौ आत्परं विनापि नुम् इत्यादि बोध्यम्। "व्यत्ययो बहुलम्" विकरणानां बहुलं व्यत्ययः स्याच्छन्दसि। "स्तुन्वन्ति दिव्यैः स्तवैः" अत्रादादेः श्नुः भाष्येन्येषामपि व्यत्यय उक्तः । " सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्धयति बाहुलकेन ॥" अत्र श्रीभागवते प्रायः उपग्रहाख्यपरस्मैपदात्मनेपदव्यत्ययोस्ति । यथा "धीमहि" इत्यादौ परस्मैपदव्यत्ययः। "त्राह्यात्मयोनेऽजिततेजसो माम्, आक्रीड बालवद्देव" इत्यादौ आत्मनेपदव्यत्ययः। अन्येपि केपि व्यत्ययाः सन्ति तत्र लिङ्गव्यत्ययो यथा "त्रयी न श्रुतिगोचरा कीदृशी मम गोचरा" पुरुषस्य यथा "नाहं न यूयं यदृतां गतिं विदुः । " कालस्य यथा " स्वधामनि ब्रह्मणि रंस्यते " इति वर्त्तमानेपि लृट् । " तदैव ते परं ज्ञानं ददामि गृहमागतः" अत्र भूते लट् । अचो यथा "इत्यभिष्टूय पुरुषम्" अत्र ह्रस्वस्य दीर्घः ततस्तुगभावः सिद्धः । यङ्शब्देन यकारमारभ्य " लिङ्याशिष्यङ् " इति ङकारेण प्रत्याहारो गृह्यते तेन स्यतासिशबादयो विकरणाः च्लेरादेशाः। आम्-यङ्णिच्यक्कणिङ्आय्ईयङ्चेति तेन "मा मा शुचः स्वतनयम्" इत्यत्र च्लेरङ् । "ईडिरे रामकृष्णौ च" इत्यादौ नाऽऽम् अनयोर्विकल्पव्यत्यययोरेव प्रायः प्रपञ्चभूता वैदिकी प्रक्रिया। अथान्यान्यपि कानिचिद्विशेषसूत्राणि श्रीमद्भागवतोपयोगीनि लिख्यन्ते । " अयस्मयादीनि च्छन्दसि " एतानि छन्दसि साधूनि भपदसंज्ञाधिकाराद्यथायोग्यं संज्ञाद्वयं बोध्यम् । तथाच वार्तिकम् " उभयसंज्ञान्यपीति वक्तव्यम् " मुसलं खल्वयस्मयम् । "षष्ठीयुक्तश्छन्दसि वा" षष्ठ्यन्तेन युक्तः पतिशब्दो घिसंज्ञो वा । सात्वतां पतये नमः । " व्यवहिताश्च " प्रादयो धातुभ्यो व्यवहिता अपि स्युः । तव परि ये चरन्त्यखिलसत्त्वनिकेततया । " तृतीया च होश्छन्दसि " जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च । समिद्भिरजुहोद्द्विजः, जुहावैतच्छिरः शत्रोः । " बहुलं छन्दसि, अदिप्रभृतिभ्यः शपः " बहुलं लुक् स्यात् । करस्थेनाहनत्प्रभुः । अत्र शपो न लुक् । " अदादिभिर्अ

१ "लपिदाभिभ्यां च" इति ण्यत् ।

क्वचित् लुक् " त्राह्यात्मयोनेऽजिततेजसो माम्, त्रायते त्राति विश्वात्मा । " कमृद्रुहिभ्यश्छन्दसि ॥ " ३ । १ । ६९ ॥ च्लेरङ् वा । इत्युक्त्वाथारुहत्स्वर्गम । " हृग्रहोर्भश्छन्दसि " गृभीतगुणाम् । " मंत्रेघसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥ २ । ४ । ८० ॥ " लिरिति च्लेः प्राचां संज्ञा एभ्यो लेर्लुक् स्यान्मन्त्रे । भौमप्रयुक्ता निरगन् धृतायुधाः । अत्र तिङ्व्यत्ययेन झेस्तिपि च्लेर्लुकि इलोपे हल्ङ्याब्भ्यो इति तलोपे " मो नो धातोः, छन्दस्युभयथा " धात्वधिकार उक्तः प्रत्ययः सार्वधातुकार्द्धधातुकोभयसंज्ञः स्यात् तेन धीमहीत्यत्र सार्वधातुकत्वात्सीयुटः सलोपः आर्द्धधातुकत्वाच्छवभावः । " तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः " न शक्नुमस्तत्प्रतिहर्त्तवे ते । " छन्दसि च " दन्तस्य दत् स्यात् बहुव्रीहौ । मृगान् कृष्णान् शुक्लदतः । " ऋतश्छन्दसि " ऋदन्ताद्बहुव्रीहेर्न कप् । इत्येवमुत्तरामातः । " शीर्षंश्छन्दसि " शिरःशब्दस्य शीर्षन् स्यात् । न्यासः शीर्षणि संस्थितः । " वा छन्दसि " दीर्घाज्जसीचि च पूर्वसवर्णदीर्घो वा स्यात् । व्रजतीर्विरेजुः । "बहुलं छन्दसि" अमाङ्योगेपि अडाटौ न स्तः । दुग्धेमामोषधीर्विप्राः । "युष्मदस्मदोः सादृश्ये वतुब्वाच्यः " यदूनां त्वावतां प्रभो । " तन्वादीनां छन्दसि बहुलं यण् इयङुवङौ च " तत्याज व्रीडितस्तन्वम्, सत्वेन नो वरदया तनुवा निरस्य । " श्रुशृणुपृकृवृभ्यश्छन्दसि " हेर्धिः । शन्नः कृधीश भगवन्नसि दीननाथः । "मंत्रेष्वाङ्यादेरात्मनः" आत्मन्शब्दस्यादेर्लोपः स्यादाङि । सह चक्रेत्मनात्मने, शेषेत्मना निजसुखानुभवो निरीहः । "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि" माध्वीर्लोकमलापहाः । "क्त्वापि च्छन्दसि" समासेऽनञ्पूर्वे । संरोहयित्वा भवभावनो हरिः, प्रेक्षयित्वा भुवो गोलम् । "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" आत्मन् भावयसे तानि कालगत्या दुरत्यया । "गतिशब्दात्सार्व्यादेशः, छन्दस्यपि दृश्यते, अस्थ्यादीनामनङ् " धियाक्षभिर्मनसा वीत यस्य । " अनो नुट् " अन्नन्तान्मतोर्नुट् । अक्षण्वतां फलमिदं न परं विदामः । " दाश्वान् साह्वान् मीढ्वांश्च " एते क्वस्वन्ता निपात्यन्ते । व्यवस्थितानामनुमृग्यदाशुषे, ततो मीढ्वांसमामन्त्र्य । " बहुलं छन्दसि " सिचोऽस्तेश्चापृक्तहलो बहुलम् ईट् अतोत्र नेट् । ब्रह्मात्मतत्वमवितुं प्रथमं त्वमस्राक्, मा भैरित्याययुर्द्रुतम् । अत्रेदं बोध्यम् । ये प्रयोगा अत्र टीकायां टीकान्तरेषु च आर्षत्वेन लिखितास्तेषु यद्यपि केचित् "समासान्तो विधिरनित्यः, आगमशास्त्रमनित्यम् " इत्यादिप्रकारेण समाधातुं शक्यन्ते तथापि सरलया रीत्या न सिद्ध्यन्ति । प्रसिद्धेषु मान्येषु च महाकाव्यादिषु च ये नोपलभ्यन्ते तान् प्रयोगकुशलाः साधुतया न मन्यन्तेऽतस्तानप्रयोज्यान् मत्वा इहार्षत्वेन व्यलिखमिति ॥ अथ छन्दसां विचारः ॥ तत्र श्रीभागवते प्रायोऽनुष्टुप् छन्दः । तदपेक्षया न्यूनानि इन्द्रवज्रोपेन्द्रवज्रावंशस्थेन्द्रवंशोपजातिवसंततिलकाख्यानि एतानि च लोकेतिप्रसिद्धानि अतः एतेषां नामानि प्रतिपद्यं न लेखिष्यन्ते । शेषाणां छन्दसां नामानि लेखिष्यन्ते। लक्षणादिकं तु बालबोधाय अत्रैव लिख्यते । तत्र छन्दसां बोधो गुरुलघुवर्णबोधाधीनः । तत्र दीर्घो गुरुः संयोगविसर्गानुस्वारेभ्यः पूर्वो ह्रस्वोपि गुरुः । संयोगादिरहितः केवलो ह्रस्वो लघुः । गुरुर्द्विमात्रो लघुरेकमात्रः । तत्र गुरुर्यथा । काशीकीरकूलकेलिकैरवकोपकौरवकल्ककिष्कुकुत्रकःकुःकंसकृष्णादिषु ककारोत्तर ईकारादिः । लघुर्यथा । करकिलकुलकृतादौ

ककारोत्तरोऽकारादिः । लघुर्ऋजूर्ध्वरेखारूपो लिख्यते । गुरुर्वक्ररेखारूपः गुरुर्गः लघुर्लः कथ्यते । गुरुलघुयोगात्त्रिवर्णात्मका गणा भवन्ति । तत्र त्रिगुरुर्मः SSS, त्रिलघुर्नः।।।, आदिगुरुर्भः S।।, आदिलघुर्यः।SS, मध्यगुरुर्जः।S।, मध्यलघू रः S।S, अन्त्यगुरुः सः ॥S, अन्त्यलघुस्तः SS।, छन्दांसि त्रिधा । वर्णच्छन्दांसि मात्राच्छन्दांसि उभयच्छन्दांसि चाएवं वर्णच्छन्दांसि समार्धसमविषमाणि । यस्य चतुर्षु चरणेषु समं लक्षणं तत्समम् । यत्र प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च समं लक्षणं तदर्द्धसमम् । यस्य चतुर्षु पादेषु भिन्नं लक्षणं तद्विषमम् । अत्र श्रीभागवते विषमाणि छन्दांसि न सन्ति । छन्दसां जातयो भेदाश्च छन्दःशास्त्रे ज्ञेयाः । अत्र केवलं लक्षणानि उदाहरणानि च लिख्यन्ते । तत्रादौ भागवतेऽन्यत्र चातिप्रसिद्धानि अनुष्टुबादीनि सप्त छन्दांसि लिख्यन्ते । वक्त्राद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् । युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्। यथा नैमिषे निमिषक्षेत्रे इत्यध्यायसमाप्त्यन्तम् । " स्यादिन्द्रवज्रा यदि तौ जगौ गः " तन्नः परं पुण्यमसंवृतार्थमित्यादि । " उपेन्द्रवज्रा जतजास्ततो गौ " स वै भवान्वेद समस्त-गुह्यम् इत्यादि । " जतौ तु वंशस्थमुदीरितं जरौ " नमन्ति यत्पादनिकेतमात्मनः शिवाय हानीय धनानि शत्रव इत्यादि । " स्यादिन्द्रवंशा ततजैरसंयुतैः " नाभात्यनन्तस्य हतत्रपः पठन्नित्यादि । " अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । एवं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥" इन्द्रवज्रोपेन्द्रवज्रयोर्यथा । स वा इदं विश्वममोघलील इत्यादि । वंशस्थेन्द्रवंशयोर्यथा । शिवाय लोकस्य भवाय भूतये इत्यादि । इन्द्रवज्रावंशस्थयोर्यथा । त्वं पर्यटन्नर्क इव त्रिलोकीमित्यादि । इन्द्रव-ज्रोपेन्द्रवज्रेन्द्रवंशानां यथा । तदा शुचस्ते प्रमृजामि भद्रे इत्यादि । " उक्ता वसन्ततिलका तभजा जगौ गः " यं प्रव्रजन्तमनुपेतमपेतकृत्यमित्यादि । अथ शेषच्छन्दांसि " प्रमाणिका जरौ लगौ " हरे तवाङ्घ्रिपङ्कजमित्यादि । " शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः " एवं राजा विदुरेणानुजेन इत्यादि । " वातोर्मीयं गदिता म्भौ तगौ गः " दृष्टः किन्नो दृग्भिरसद्ग्रहैस्त्वमिति । अत्र शालिनीपादोपि "राजहंसी नरौ रो ल्गौ यतिः स्याद्वसुसायकैः।" अन्यच्च। "नरला गुरू राजहंसिका" केचिदिमं ललितमाहुः। जयति तेऽधिकं जन्मना व्रज इत्यादि । " स्वागतेति रनभाद्गुरुयुग्मम् " वामबाहुकृतवामकपोल इत्यादि । " द्रुतविलम्बितमाह नभौ भरौ " निगमकल्पतरोर्गलितं फलमित्यादि । " भुजङ्ग-प्रयातं भवेद्यैश्चतुर्भिः " अयं त्वत्कथामृष्टपीयूषनद्यामित्यादि । " रैश्चतुर्भिर्युता स्रग्विणी सम्मता " स्वागतन्ते प्रसीदेश तुभ्यं नमः इत्यादि । " चतुर्ग्रहैरिह रुचिरा जभस-जगाः " पिबन्ति ये भगवत आत्मनः सतामित्यादि । " म्नौ ज्रौ गस्त्रिदश यतिः प्रहर्षिणीयम् " यज्ञोऽयं तव यजनाय केन सृष्ट इत्यादि । " सजसा जगौ भवति मञ्जुभा-षिणी " जगदुद्भवस्थितिलयेषु दैवतः इत्यादि । " वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् " अंशांशास्ते देवमरीच्यादय एते इत्यादि । " ननमयययुतेयं मालिनी भोगिलोकैः " तव वरद वराङ्घ्रावाशिषे हाखिलार्थ इत्यादि । " मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् " उत्पन्त्यध्वन्यशरणउरुक्लेशदुर्गान्तकोग्रेत्यादि । " रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी " पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतमित्यादि । " यदि भवतो नजौ भजजला गुरु नर्कुटकम् " जय जय जह्यजामजित दोषगृभीतगुणामित्यादि ।

“ सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ” जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराडित्यादि । “ म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ” गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः इत्यादि ॥ अथार्द्धसमच्छन्दः ॥ “ षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥” प्रिय रावपदानि भाषसेमृतसञ्जीविकयानया गिरा इत्यादि ।“पर्यन्तेयौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्।”इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशामित्यादि । वस्तुतस्त्वयं त्रिष्टुब्भेद एव । “ अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा । ” इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि इत्यादि ॥ अथ मात्राछन्दः ॥ “ यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या॥”इदं स्थूलं लक्षणमपि न घटते नितरां सूक्ष्मं तच्चार्षत्वात्सोढव्यम् । अजितजितः सममतिभिः इत्यादि । अन्यत्रापि बहुस्थलेषु छन्दोभङ्गः सोढव्यः ॥ अथ भागवतश्लोकसंख्याविचारः ॥ तत्र यद्यपि गद्यपद्यानां संख्यामात्रगणनया सर्वेषां द्वात्रिंशदक्षरमानगणनया वा तत्तत्पुराणोक्ता संख्या तत्र तत्र क्वापि न सम्यक् संगच्छते तथापि श्रीमद्भागवते उवाचान्तवाक्यानां संख्या तथा अन्येषां गद्यपद्यानामध्यायसमाप्तिवाक्यानां च द्वात्रिंशदक्षरात्मकानुष्टुम्मानगणनया या संख्या भवति सा च योजिता अष्टादशसहस्रसंख्या भवति । तथा चातिप्रसिद्धस्य सर्वसाधारणस्य एतट्टीकामूलतया स्वीकृतस्य पुस्तकस्य यथाशक्ति सावधानतया वारत्रयं गणना कृता तत्र अनुष्टुम्मितौ श्लोकेभ्योऽवशिष्टान्यक्षराणि अष्टाक्षरपादकल्पनया गणितानि कुत्रचिच्छ्लोकेष्वष्टाभ्य ऊनान्यवशिष्टाक्षराणि श्लोकान्तरावशिष्टेषु संयोज्य अध्यायावशिष्टानि चाध्यायान्तरावशिष्टेषु संयोज्य पादकल्पना कृता। पादप्रमाणादूनाधिकान्यक्षराणि न लिखितानि । एवं कृते गद्यपद्यसंख्या चतुःषष्ट्यधिका शतद्वयी चतुर्दशसहस्राणि च ( १४२६४ ) तेषां द्वात्रिंशदक्षरानुष्टुम्मितिः । पादोनषष्ट्यधिका शतद्वयी षोडशसहस्राणि च ( १६२५९।।। ) अध्यायसमाप्तिवाक्यानां च पुस्तकभेदेनैकविध्याभावात् एकैकं वाक्यम् इति श्रीभागवते महापुराणे पारमहंस्यां संहितायां प्रथमस्कन्धे शौनकादिप्रश्नवर्णनं प्रथमोध्यायः इत्याद्यात्मकं साधारण्येन सपादानुष्टुम्मितं प्रकल्प्य सर्वे श्लोकाः पादोना एकोनविंशत्यधिकचतुःशतीमिताः(४१८।।।) कल्पिताः । उवाचान्तानि वाक्यानि च विंशत्यधिका शतत्रयी एकं सहस्रं चेति । तथा चानुष्टुम्मित्या सहाध्यायसमाप्तिवाक्यश्लोकसंख्या उवाचसंख्या च योजिता सती सार्द्धश्लोकोना अष्टादशसहस्रसंख्या ( १७९९८॥ ) संपन्ना अत्र वारत्रयगणनेपि सार्द्धश्लोकन्यूनता पुस्तकपाठभेदात् । गणनायां क्वचिदेकद्व्यक्षरत्यागात्प्रमादाद्वा जाता पुनर्गणनेपि पाठभेदादिभिः किञ्चिदत्यल्पमन्तरं भवेदेवेति सन्तः क्षमन्ताम् । वस्तुतोऽल्पिष्ठं न किञ्चिदिदमन्तरं दोषायेति । विजयध्वजसंमतः पाठस्तु अधिकोपि बहुटीकाविरोधात् उपेक्षितः । काशीनाथोपाध्यायेन चण्डीसप्तशतीमन्त्रविभागरीत्यापि अष्टादशसहस्रसंख्या परिगणिता इति तद्व्याख्याने स्पष्टम् । अथ भागवतस्कन्धश्लोकादिसंख्या श्लोकैरुच्यते । त्रिभूमिनागा ( ८१३ ) रसनन्दरामाः ( ३९६ ) सार्द्धा नृपेन्द्राः ( १४१६॥ ) भुजबाणशक्राः ( १४५२ ) ॥ सार्द्धाङ्गरामाद्रि ( ७३६॥ ) मिता गजेषुनागो-

न्मिताः ( ८५८ ) सार्द्धखतर्कशैलाः ( ७६०॥ ) ॥ १ ॥ गजाग्निनन्दा ( ९३८ ) श्चतुरद्रिगाव ( ९७४ ) स्त्र्यब्धङ्करामा ( ३९७३ ) नगशैलविश्वे ( १३७७ ) ॥ सार्द्धाङ्कषट् पञ्च च ( ५६९॥ ) गद्यपद्यसंख्या क्रमात्स्कन्धगताऽवगम्या ॥ २ ॥ समुद्रषड्दङ्मनवो ( १४२६४ ) स्त्वैक्यमेषामनुष्टुम्मितयस्तु वेद्याः ॥ रामाभ्रनन्दा ( ९०३ ) अथ सार्द्धचक्षुःशैलाब्धयः ( ४७२॥ ) सार्द्धषडभ्रभूपाः ( १६०६॥ ) ॥ ३ ॥ पादोनखद्वन्द्वनृपा ( १६१९।।। ) स्त्रिनागसूर्या ( १२८३ ) विपादाभ्रशराङ्कसंख्या ( ९४९।।। ) ॥ सार्द्धाद्रिवेदाष्ट ( ८४७॥ ) च साङ्घ्रिचन्द्रपञ्चाभ्रभूम्यो ( १०५१। ) मनुदिङ्मिताश्च ( १०१४ ) ॥ ४ ॥ तत्वाब्धिवेदा ( ४४२५ ) अथ साङ्घ्रिवेदाब्धीन्द्राः ( १४७४। ) सपादा गुणचन्द्रतर्काः ( ६१३। ) ॥ सर्वैक्यमङ्कव्यूनखषड्द्विभूपा ( १६२५९।।। ) उवाचवाचो गजषड् ( ६८ ) जिना ( २४ ) श्च ॥ ५ ॥ खेन्द्राश्च ( १४० ) सप्ताङ्गभुवः ( १६७ ) कुबाणाः ( ५१ ) भूताभ्रभूम्यो ( १०५ )ऽब्धिगजाः ( ८४ ) कुकाष्ठाः ( १०१ ) ॥ नवेषव ( ५९ ) स्त्रीषुगुणा ( ३५३ ) नवेशा ( ११९ ) गोम्बूनि ( ४९ ) चैक्यं तु खदृग्गुणाक्ष्माः ( १३२० ) ॥ ६ ॥ प्रायेण पादान्वितपद्यमानमत्रैकमध्यायसमाप्तिगद्यम् ॥ पादोननन्देन्दुचतु ( ४१९।।। ) र्मितानि पद्यानि तेषामिति कल्पितानि ॥ ७ ॥ जातानि सर्वस्य युतौ सहस्राण्यष्टादशाध्यर्द्धमिहोनमेकम् ॥ तत्पाठभेदान्मम वा प्रमादादत्यन्तमल्पं नहि दोषपात्रम् ॥ ८ ॥ अथ तत्तदध्यायादौ वक्ष्यमाणाप्यध्यायश्लोकसंख्या झटिति बोधाय चक्रेणात्रापि लिख्यते ॥



## प्रथमस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | २३॥ | २६॥। | १ |
| २ | ३४ | ३६। | २ |
| ३ | ४५ | ४७ | १ |
| ४ | ३३॥ | ३५। | ३ |
| ५ | ४० | ५१। | ४ |
| ६ | ३९ | ४० | ४ |
| ७ | ५८ | ६०॥ | १० |
| ८ | ५२ | ५६ | ५ |
| ९ | ४९ | ५६॥। | ४ |
| १० | ३६ | ४२॥ | २ |
| ११ | ३९॥ | ४५। | १ |
| १२ | ३४॥ | ३४॥ | ४ |
| १३ | ६०॥ | ६१॥ | ५ |
| १४ | ४४॥ | ४५॥ | ३ |
| १५ | ५१॥ | ६४॥ | २ |
| १६ | ३७ | ४४॥ | ४ |
| १७ | ४५ | ४६॥ | ७ |
| १८ | ५०॥ | ५६। | ३ |
| १९ | ४० | ५२। | ३ |

## द्वितीयस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ३९॥ | ४४॥। | ३ |
| २ | ३७ | ५०॥। | १ |
| ३ | २५ | २८ | २ |
| ४ | २५॥ | ३१॥ | ४ |
| ५ | ४३ | ४३ | २ |
| ६ | ४६ | ४९॥। | १ |
| ७ | ५३ | ८९॥। | १ |
| ८ | २९॥ | २९॥ | २ |
| ९ | ४५॥ | ५३॥ | ५ |
| १० | ५२ | ५२ | ३ |

## तृतीयस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ४५ | ६० | ४ |
| २ | ३४ | ३९ | २ |
| ३ | २८ | ३१। | १ |
| ४ | ३६ | ४१॥ | ८ |
| ५ | ५०॥ | ६१। | ५ |
| ६ | ३९ | ३९॥ | १ |
| ७ | ४२॥ | ४३। | ६ |
| ८ | ३३ | ४५॥ | १ |
| ९ | ४४ | ६२॥। | ४ |
| १० | २९॥ | २९॥ | ५ |
| ११ | ४१॥ | ४२। | ३ |
| १२ | ५६॥ | ५६॥ | ४ |
| १३ | ५०॥ | ६२ | ९ |
| १४ | ५० | ५३॥। | ११ |
| १५ | ५० | ७५॥ | ६ |
| १६ | ३७ | ४८। | ६ |
| १७ | ३१ | ३५॥ | १ |
| १८ | २८ | ३४॥। | ४ |
| १९ | ३८ | ४४ | ४ |
| २० | ५३॥ | ५४॥। | ४ |
| २१ | ५६॥ | ६१ | ६ |
| २२ | ३९॥ | ४१॥। | ४ |
| २३ | ५७ | ६३ | ५ |
| २४ | ४७ | ४८ | ७ |
| २५ | ४४ | ४८॥ | ९ |
| २६ | ७३ | ७३ | ३ |
| २७ | ३० | ३०। | ३ |
| २८ | ४४ | ५७॥ | १ |
| २९ | ४५॥ | ४६ | ३ |
| ३० | ३४ | ३४॥ | १ |
| ३१ | ४८॥ | ५६॥ | ३ |
| ३२ | ४३ | ४४॥ | १ |
| ३३ | ३७ | ४१। | ५ |

## चतुर्थस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ६६ | ६९ | ७ |
| २ | ३५॥ | ३६। | ४ |
| ३ | २५ | ३४ | ४ |
| ४ | ३४ | ४९॥ | ३ |
| ५ | २६ | ३२। | १ |
| ६ | ५३ | ५९। | २ |
| ७ | ६१॥ | ७९॥ | २७ |
| ८ | ८२ | ८८। | १३ |
| ९ | ६८ | ८१ | ९ |
| १० | ३० | ३२। | २ |
| ११ | ३५ | ४०। | २ |
| १२ | ५२ | ६०॥। | ७ |
| १३ | ४९ | ५१ | ७ |
| १४ | ४६॥ | ४७॥ | ४ |
| १५ | २६ | २७ | ४ |
| १६ | २७ | ३१॥ | १ |
| १७ | ३६ | ४१ | ७ |
| १८ | ३२ | ३२ | १ |
| १९ | ४२ | ४४। | २ |
| २० | ३८ | ४६ | ६ |
| २१ | ५२ | ६०॥ | ६ |
| २२ | ६३॥ | ७१ | ७ |
| २३ | ४० | ४३॥ | ३ |
| २४ | ८० | ८५॥। | ६ |
| २५ | ६२ | ६४॥ | ५ |
| २६ | २६॥ | २९॥ | ४ |
| २७ | ३० | ३१ | १ |
| २८ | ६५ | ६५ | २ |
| २९ | ८६॥ | ९४॥ | ६ |
| ३० | ५१ | ५६। | ६ |
| ३१ | ३१ | ३५॥। | ८ |



## पञ्चमस्कन्धः ।

| अध्या० | गद्यपद्य संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ४० | ७९॥ | ४ |
| २ | २३ | ४४ | २ |
| ३ | २१ | ३८॥ | ५ |
| ४ | १९ | ३८। | १ |
| ५ | ३५ | ६३। | २ |
| ६ | १९ | ३५॥। | २ |
| ७ | १४ | ३०। | १ |
| ८ | ३२ | ५९॥। | १ |
| ९ | २२ | ५२॥ | १ |
| १० | २६ | ४६॥। | ३ |
| ११ | १७॥ | २४ | १ |
| १२ | १६ | २२ | २ |
| १३ | २६ | ४० | ४ |
| १४ | ४६ | ८१ | १ |
| १५ | १४ | २७। | १ |
| १६ | ३० | ५१॥। | २ |
| १७ | २५ | ५० | २ |

## पञ्चमस्कन्धः ।

| अध्या० | गद्यपद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १८ | ३९ | ६५॥ | २ |
| १९ | ३१ | ५६॥ | २ |
| २० | ६९ | ८४॥ | २ |
| २१ | २२ | ३१॥ | १ |
| २२ | १९ | ३६। | २ |
| २३ | ९ | २७॥ | १ |
| २४ | ५१ | ७३। | १ |
| २५ | १७ | ३२॥ | १ |
| २६ | ५४ | ९५ | ४ |

## षष्ठस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ६८ | ६९॥ | ७ |
| २ | ४९ | ५१ | ४ |
| ३ | ३५ | ४६ | ५ |
| ४ | ५४॥ | ५९॥ | ७ |
| ५ | ४४ | ४४ | ४ |
| ६ | ४५॥ | ४५॥ | १ |
| ७ | ४१ | ४२। | ८ |
| ८ | ४३ | ४८। | ४ |
| ९ | ५५॥ | ८१॥। | ६ |
| १० | ३३ | ३५॥ | ४ |
| ११ | २७ | ३५ | २ |
| १२ | ३५॥ | ३९। | ४ |
| १३ | २३ | २५॥। | ६ |
| १४ | ६०॥ | ६७ | ७ |
| १५ | २८ | २८॥। | ५ |
| १६ | ६५॥ | ७४॥ | ९ |
| १७ | ४१ | ४३ | ९ |
| १८ | ७८ | ७८॥ | ११ |
| १९ | ३१ | ३४॥। | २ |

## सप्तमस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ४८॥ | ४९॥। | ८ |
| २ | ६२॥ | ६८ | ५ |
| ३ | ३९ | ४१ | ४ |
| ४ | ४७॥ | ५० | ४ |
| ५ | ५७॥ | ६१॥ | १० |
| ६ | ३० | ३५। | २ |
| ७ | ५५ | ५८॥। | ४ |
| ८ | ५७ | ७८। | २० |
| ९ | ५५ | ८८। | ४ |
| १० | ७१ | ७४॥ | ११ |
| ११ | ३६ | ३६॥ | ३ |
| १२ | ३१॥ | ३१॥ | १ |
| १३ | ४६॥ | ४६॥। | ४ |
| १४ | ४२॥ | ४२॥ | २ |
| १५ | ८१ | ८५ | २ |

## अष्टमस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ३३ | ३४॥ | ६ |
| २ | ३३ | ३९॥। | १ |
| ३ | ३३ | ४३॥ | ३ |
| ४ | २६ | २८॥ | ४ |
| ५ | ५० | ५८॥। | ६ |
| ६ | ३९॥ | ४३ | ५ |
| ७ | ४७ | ५८ | ५ |
| ८ | ४६॥ | ५१॥ | १ |
| ९ | २९ | ३२॥ | ३ |
| १० | ५७ | ६१॥। | १ |
| ११ | ४८॥ | ५१। | ५ |
| १२ | ४७ | ५६ | ८ |
| १३ | ३६ | ३६ | १ |
| १४ | ११ | ११ | २ |
| १५ | ३७ | ४०॥ | ३ |
| १६ | ६२॥ | ६३ | ५ |
| १७ | २८॥ | ३३॥। | ६ |
| १८ | ३२॥ | ३९ | २ |
| १९ | ४३॥ | ४५। | ६ |
| २० | ३४ | ४१॥। | ३ |
| २१ | ३४॥ | ३७ | २ |
| २२ | ३६॥ | ४३॥ | ८ |
| २३ | ३१ | ३४॥ | ८ |
| २४ | ६१॥ | ६७ | ७ |

## नवमस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ४२ | ४२ | ५ |
| २ | ३६ | ३६॥ | १ |
| ३ | ३६॥ | ३७॥ | १ |
| ४ | ७१॥ | ७७॥ | ६ |
| ५ | २७ | ३०। | ५ |
| ६ | ५५॥ | ५८। | १ |
| ७ | २७॥ | २७॥ | १ |
| ८ | ३१ | ३३॥ | ४ |
| ९ | ५० | ५०॥ | ४ |
| १० | ५७ | ७२। | २ |
| ११ | ३६॥ | ३८॥ | ३ |
| १२ | १६ | १६ | १ |
| १३ | २७ | २७ | २ |
| १४ | ५० | ५० | ४ |
| १५ | ४१॥ | ४४॥ | ३ |
| १६ | ३७॥ | ३७॥ | १ |
| १७ | १८॥ | १८॥ | १ |
| १८ | ५१॥ | ५१॥ | ६ |
| १९ | २९॥ | २९॥। | १ |
| २० | ३९॥ | ३९॥ | ३ |
| २१ | ३६॥ | ३७। | १ |
| २२ | ४९॥ | ४९॥ | १ |
| २३ | ३०॥ | ३०॥ | १ |
| २४ | ६७ | ६९। | १ |

## दशमस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ६९ | ७४। | ८ |
| २ | ४२॥ | ५२। | २ |
| ३ | ५३॥ | ६३। | ६ |
| ४ | ४७ | ४७॥ | ४ |
| ५ | ३२ | ३२॥। | ४ |
| ६ | ४४ | ५० | २ |
| ७ | ३८ | ४४ | २ |
| ८ | ५२॥ | ६०॥। | ७ |
| ९ | २३ | २७॥ | १ |
| १० | ४३ | ४५। | ७ |
| ११ | ५८॥ | ६१ | २ |
| १२ | ४४ | ५४॥। | ४ |
| १३ | ६४ | ७५। | १ |
| १४ | ६१ | ८१ | ४ |
| १५ | ५२ | ५८॥। | ३ |
| १६ | ६८ | ८५॥ | ७ |
| १७ | २५ | २६ | २ |

## दशमस्कन्धः ।

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| १८ | ३२ | ३५॥ | १ |
| १९ | १६ | १६॥। | २ |
| २० | ४९ | ४९ | १ |
| २१ | २० | ३१॥ | २ |
| २२ | ३८॥ | ४० | ३ |
| २३ | ५२ | ५५॥ | ५ |
| २४ | ३८ | ३८ | ५ |
| २५ | ३३ | ३४ | २ |
| २६ | २५॥ | २६॥। | २ |
| २७ | २८ | ३१॥ | ६ |
| २८ | १७॥ | १७॥ | ३ |
| २९ | ४८ | ६०॥ | ७ |
| ३० | ४४ | ४८॥ | १ |
| ३१ | १९ | २६॥ | १ |
| ३२ | २२ | २४॥। | ३ |
| ३३ | ४१ | ४८॥ | ३ |
| ३४ | ३२॥ | ३३ | २ |

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| ३५ | २६ | ३५ | ३ |
| ३६ | ४१ | ४२ | ३ |
| ३७ | ३३ | ३८ | २ |
| ३८ | ४३ | ५२॥ | २ |
| ३९ | ५७॥ | ६४॥ | ५ |
| ४० | ३० | ३३॥। | १ |
| ४१ | ५२ | ५६॥। | ५ |
| ४२ | ३८ | ४०॥। | २ |
| ४३ | ४०॥ | ४३ | २ |
| ४४ | ५१ | ५५॥ | २ |
| ४५ | ५०॥ | ५१॥ | ५ |
| ४६ | ४९ | ५२ | ४ |
| ४७ | ६९॥ | ८४। | ९ |
| ४८ | ३६॥ | ४३॥। | २ |
| ४९ | ३१ | ३१॥। | ५ |
| ५० | ५८॥ | ६३॥ | ३ |
| ५१ | ६५ | ७१॥। | ८ |

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| ५२ | ४४ | ४९। | ५ |
| ५३ | ५८ | ६२ | ३ |
| ५४ | ६०॥ | ६२ | ३ |
| ५५ | ४०॥ | ४१॥। | २ |
| ५६ | ४५॥ | ४६। | ४ |
| ५७ | ४२॥ | ४३। | १ |
| ५८ | ५८ | ६०। | ६ |
| ५९ | ४६॥ | ५६॥। | ४ |
| ६० | ५९ | ७५। | ८ |
| ६१ | ४२ | ४५॥ | ३ |
| ६२ | ३६ | ३८॥ | ४ |
| ६३ | ५३ | ५७॥ | ५ |
| ६४ | ४४ | ४७ | ३ |
| ६५ | ३३ | ३३॥ | १ |
| ६६ | ४३ | ४५। | २ |
| ६७ | २८ | २८ | २ |
| ६८ | ५४ | ५६। | ३ |

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| ६९ | ४५ | ५२। | ४ |
| ७० | ४७॥ | ५५ | ६ |
| ७१ | ४६॥ | ५५ | ३ |
| ७२ | ४९ | ५२॥। | ६ |
| ७३ | ३५ | ३६॥ | ५ |
| ७४ | ५४॥ | ५५। | ३ |
| ७५ | ४०॥ | ४५॥। | २ |
| ७६ | ३३ | ३३ | २ |
| ७७ | ३८ | ४१॥ | २ |
| ७८ | ४० | ४० | ५ |
| ७९ | ३४॥ | ३४॥ | १ |
| ८० | ४५॥ | ४६॥। | ५ |
| ८१ | ४१॥ | ४४ | २ |
| ८२ | ४९ | ५३॥। | ७ |
| ८३ | ४३ | ५०। | १२ |
| ८४ | ७२ | ७६॥। | १० |
| ८५ | ५९ | ६४ | ९ |

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| ८६ | ५९ | ६२ | ८ |
| ८७ | ५०॥ | ८३॥ | ८ |
| ८८ | ४०॥ | ४२ | ७ |
| ८९ | ६७ | ७२ | ७ |
| ९० | ५० | ६२॥ | २ |

## एकादशस्कन्धः ।

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | २४ | २७॥ | ३ |
| २ | ५५ | ६१ | ८ |
| ३ | ५५॥ | ६०॥ | ८ |
| ४ | २३ | ३४। | २ |
| ५ | ५२॥ | ५८ | ६ |
| ६ | ५१ | ६०। | १० |
| ७ | ७४ | ७६॥ | ७ |
| ८ | ४४ | ४५॥ | ३ |
| ९ | ३३॥ | ३८ | २ |

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| १० | ३७ | ३७॥ | २ |
| ११ | ४९ | ५० | ३ |
| १२ | २४ | २८। | ३ |
| १३ | ४२ | ४६॥ | ७ |
| १४ | ४७ | ४९ | ४ |
| १५ | ३६ | ३६ | ३ |
| १६ | ४४॥ | ४४॥। | २ |
| १७ | ५८ | ५८॥ | ३ |
| १८ | ४८॥ | ४८॥ | १ |
| १९ | ४५॥ | ४७। | ५ |
| २० | ३७॥ | ३८ | २ |
| २१ | ४३॥ | ४३॥ | १ |
| २२ | ६१॥ | ६३। | ७ |
| २३ | ६२ | ६८॥। | ५ |
| २४ | २९ | २९ | १ |
| २५ | ३६॥ | ३६॥ | १ |
| २६ | ३५॥ | ३५॥। | ३ |

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| २७ | ५५ | ५५ | २ |
| २८ | ४४॥ | ५२। | ३ |
| २९ | ४९॥ | ५७॥। | ७ |
| ३० | ५० | ५५ | ४ |
| ३१ | २८॥ | ३१। | १ |

## द्वादशस्कन्धः ।

| अध्या० | पद्य-संख्या | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ४३॥ | ४३॥ | २ |
| २ | ४४॥ | ४४॥ | १ |
| ३ | ५२ | ५४। | ३ |
| ४ | ४३ | ४६॥। | १ |
| ५ | १३॥ | १३॥ | १ |
| ६ | ८० | ८८॥। | ८ |
| ७ | २५॥ | २५॥ | १ |
| ८ | ४९ | ५७॥ | ३ |
| ९ | ३४ | ३९॥ | ३ |

## द्वादशस्कन्धः ।

| अध्या० | पद्य-संख्या | अनु-ष्टुभः | उवाच संख्या |
|---|---|---|---|
| १० | ४२ | ४२॥ | ११ |
| ११ | ५०॥ | ५२। | ४ |
| १२ | ६९ | ७६। | १० |
| १३ | २३ | २८॥ | १ |

## स्कन्धश्लोकादियोगः ।

| स्कन्धः | पद्यगद्य संख्या. | अनुष्टुभः | उवाच संख्या |
|---|---|---|---|
| १ | ८१३ | ९०३ | ६८ |
| २ | ३९६ | ४७२॥ | २४ |
| ३ | १४१६॥ | १६०६॥ | १४० |
| ४ | १४५२ | १६१९॥। | १६७ |
| ५ | ७३६॥ | १२८३ | ५१ |
| ६ | ८५८ | ९४९॥। | १०५ |
| ७ | ७६०॥ | ८४७॥ | ८४ |
| ८ | ९३८ | १०५१। | १०१ |
| ९ | ९७४ | १०१४ | ५९ |
| १० | ३९७३ | ४४२५ | ३५३ |
| ११ | १३७७ | १४७४। | ११९ |
| १२ | ५६९॥ | ६१३। | ४९ |
| सर्वयोगः | १४२६४ | १६२५९॥। | १३२० |



अत्र प्रकरणार्थः स्कन्धार्थः वेदादिनानाप्रमाणसंग्रहः तत्प्रामाण्यतारतम्यव्यवस्था श्रीमद्भागवतदेवीभागवतविवादः श्रीभागवतोपयोगिनानामतवर्णनमित्यादिर्बहुविधो विषयष्टीकायाः शेषभागे श्रीमद्भागवतपर्यङ्काख्ये भविष्यतीति मङ्गलम् ॥

नीत्वा दुष्कृतपूरितैः स्वचरितैः षष्टिं समानां वृथालस्याद्धर्म्ममनाचरन्परिमृषन्नामुष्मिकीर्यातनाः ॥ हित्वान्यान् परमेश्वरं शरणयन्नल्पेन शेषायुषा श्रीमद्भागवतार्थलेखनविधौ व्यापारये लेखनीम् ॥ १ ॥ नो वैदुषी न बहुपुस्तकसंग्रहोपि नीरोगतापि न न कोपि सहायभूतः ॥ वारान्निधिं भुजयुगेन हठात्तितीर्षोः श्रीश्रीधरादिगिर एव ममावलम्बः ॥ २ ॥ अनन्यचेता जरठो जडोयं कृताञ्जलिः प्रार्थयते सदैन्यम् ॥ तुच्छामपीमां कृपयाऽन्वितार्थप्रकाशिकां स्वीकुरुतान्मुकुन्दः ॥ ३ ॥

इति संक्षिप्त उपोद्घातः ॥



॥ इति उपोद्घातः समाप्तः ॥

॥ श्रीपरमात्मने नमः ॥ आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेस्तु मम चित्तमगोचरेपि ॥ यत्सद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥ यावन्निरञ्जनमजं पुरुषं जरन्तं संचिन्तयामि सकले जगति स्फुरन्तम् ॥ तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥ प्रेम्णा मुकुन्दपदकञ्ज-युगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या ॥ गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्वयाय कुरुते प्रथमे प्रयत्नम् ॥ ३ ॥ प्रथमस्यादिमे सर्वशास्त्रसारादिबुद्धये ॥ षट् प्रश्नाः शौनकादीनां श्लोकाः सार्द्धत्रिबाहवः [२३॥] ॥ अनुष्टुभो व्यंग्रिकक्षाण्युवाचेत्येकमीरितम् [२६॥] ॥ १ ॥ इह खलु भगवति श्रीकृष्णाख्ये भास्वति यथासमयमात्मानं प्रकाश्यान्तर्हिते नानाशास्त्रपुराणेतिहासादीनां सर्वजननिकायत्रायकत्वरूपेष्वर्थेषु यामिकेष्विव कालेन दैवाद्वैगुण्योदयादालस्येनेव केषुचित्प्रसुप्तेषु तेष्वेव मध्ये कैश्चित्कैश्चित्प्रत्युत " जुगुप्सितं धर्मकृतेनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः । " इत्यादितोऽवगतैरर्थाकारैरनर्थैश्चौरैरिवोद्भूय तत्तत्क्षणेतृणपर्यन्तानां सर्वेषां चित्त-प्रसादरूपेषु महाधनेष्वपहृतेषु " यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ " इति, " परित्राणाय साधूनां विनाशाय च दुष्कृताम् । " इति श्रीगीतोक्तनिमित्तलब्धलक्षणतया यादोमृगपक्षिमनुष्यदेवेषु मत्स्यवराहहंसरामवामनरूप इव " कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्ट-दृशामेष पुराणार्कोऽधुनोदितः ॥ " इति वचनव्यंजितश्रीकृष्णप्रतिमूर्तिताकत्वेन ममाहमेवाभिरूपः कैवल्यादिति निरस्ततद्भिनान्यसादृश्यतया श्रीशुकपरीक्षिद्भ्यां श्रीकृष्ण

॥ श्रीगणेशाय नमः ॥ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

एव पुराणेषु श्रीमद्भागवताख्यशास्त्रचूडामणिरूपोऽवततार । तत्क्षणेना प्रथमत एवाचार्यचूडामणिः श्रीकृष्णद्वैपायनः स्वाभीष्टदेवतध्यानलक्षणं मङ्गलमाचरति—जन्माद्यस्येति ॥ अत्र सर्वमपि भागवतं बहुभिष्टीकाकारैः स्वस्वमतानुसारेण बहुधा व्याख्यातम् । तत्रापि प्रथमश्लोकस्तु चिन्तामणिरिवानंतार्थदः स्वस्वमतिकौशलेन प्रकृतानुपयुक्तबहुवि-षयपरत्वेनापि कैश्चिद्व्याख्यातः । तत्र भारतं कर्ममीमांसोपबृंहकं भागवतं तु ब्रह्ममीमांसोपबृंहकमिति मन्यमानैः अस्माभिस्तु श्रीभागवतप्रतिपाद्यौ मुख्यौ विषयौ निराका-रसाकारब्रह्मणी । तत्प्राप्त्युपायभूतौ भक्तियोगज्ञानयोगौ तदुपकारकः कर्मयोगश्चेति तत्परतया यथाशक्ति सर्वमताविरोधेन व्याख्यायते । अर्थेषु अन्वयात् अकार्येभ्यश्च इतरतो हेतोः यतः परमेश्वरात् अस्य जन्मादि भवति । यश्च अभिज्ञः स्वराट् च यश्च हृदा आदिकवये ब्रह्म तेने । यत् यत्र सूरयोपि मुह्यन्ति । यथा तेजोवारिमृदां विनिमयो भासते तथा यत्र त्रिसर्गः अमृषा भासते तं स्वेन धाम्ना सदा निरस्तकुहकं परं सत्यं धीमहीत्यन्वयः । अर्थेषु कार्येषु परमेश्वरस्य सद्रूपेणान्वयादकार्येभ्यश्च खपुष्पादिभ्य इतरतः

१ किंचित्त्यक्त्वा चक्रवर्त्तितो भिक्षितेयमतिरमणीयाऽन्वतरणिका ।

तद्व्यतिरेकाद्धेतोः यतः परमेश्वरात् अस्य विश्वस्य जन्मादि जन्मस्थितिभङ्गं भवति यद्वा अन्वयशब्देनानुवृत्तिरितरशब्देन व्यावृत्तिः । अनुवृत्तत्वात्सद्रूपं ब्रह्म कारणं मृत्सु-
वर्णादिवत् । व्यावृत्तत्वाद्विश्वं कार्यं घटकुण्डलादिवत् इत्यर्थः । यद्वा सावयवत्वादन्वयव्यतिरेकाभ्यां निर्णीतं यदस्य जन्मादि तद्यतो भवति इति संबन्धः । यद्वा अन्वया-
दुपादानकारणात् इतरश्च निमित्तकारणादुपादाननिमित्तोभयरूपाद्यतोऽस्य जन्मादि भवति । यश्च अभिज्ञः चैतन्यात्मा यद्वा अर्थेषु सृज्यवस्तुषु अभिज्ञः इत्यन्वयः । यः स्वराट्
स्वेनैव राजते स्वतः सिद्धज्ञान इत्यर्थः । यः हृदा मनसैव आदिकवये ब्रह्म वेदं स्वतत्त्वं वा तेने प्रकाशितवान् । यत् यस्मिन् ब्रह्मणि सूरयोपि मुह्यन्ति । मुह्यन्तीत्यादिपरमेश्वर-
विशेषणं वा । यथा तेजोवारिमृदां विनिमयः अन्यस्मिन्नन्यावभासः अधिष्ठानसत्तया सद्वत्प्रतीयते तथा यत्र यस्मिन् त्रिसर्गः त्रयाणां मायागुणानां तमोरजःसत्त्वानां
सर्गो भूतेन्द्रियदेवतारूपः मृषा सन् अमृषा सत्यः यत्सत्यतया मिथ्यासर्गोपि सत्यवत्प्रतीयते । तत्र तेजसि किरणे वारिबुद्धिर्मृगतृष्णायाम् । मृदि जलबुद्धिः काचादौ । मृदि
तेजोबुद्धी रत्नादौ । इत्याद्यन्यदपि ज्ञेयम् इत्यध्यारोपः । अथापवादः । स्वेन स्वस्वरूपेणैव धाम्ना तेजसा सदा निरस्तं कुहकं मायारूपं कपटं यस्मिन् तं परं प्रकृष्टं सत्यं
कालत्रयेप्यबाध्यं परमेश्वरं शिष्यसहिता वयं धीमहि ध्यायेम । ध्यायतेर्लिङि छान्दसम् । "व्यत्ययो बहुलम्" इति व्यत्ययादात्मनेपदम् । "छन्दस्युभयथा" इति उभयसंज्ञतया
आर्द्धधातुकत्वाच्छबभावः । सार्वधातुकत्वात्सीयुटः सलोपः । " ध्यायतेः संप्रसारणं च " इति क्विपि विहितमपि बाहुलकात् लिङ्यपि संप्रसारणम् । पूर्वरूपम् "हल" इति
दीर्घः । अत्र गायत्र्या च समारम्भ इति लक्षणोक्तेः । गायत्र्यर्थोपि दर्शितः । सर्वगायत्रीमन्त्राऽव्यभिचारि धीमहिपदं च प्रयुक्तम् । अत्यन्तगोप्यायाः गायत्र्याः प्रकाश-
रूपेण पठनानर्हतया गायत्र्यर्थेन प्रारम्भः । तत्र जन्माद्यस्य यत इत्यनेन सवितुरित्यस्यार्थ उक्तः । यतः सूते इति सविता अत्र स्थितिप्रलयावप्युपलक्षणीयौ । परमित्यनेन
वरेण्यपदस्यार्थ उक्तः । उभयोरपि श्रेष्ठवाचकत्वात् । सत्यमित्यनेन भर्गपदस्यार्थ उक्तः । यतो ब्रह्मैव सदन्यदसत्यं तत्पदार्थस्तु विशेषणतया न स्वतन्त्रः । यद्वा तत्प्रसिद्धं
स्वराडित्यनेन देवपदस्यार्थ उक्तः । यतो दीव्यति स्वतः प्रकाशते इति देवः । स्वेनात्मनैव राजते इति स्वराट् । प्रकाशोऽत्र ज्ञानं तस्य द्योतनात्मकत्वात् । यदुक्तं " ज्योति-
र्वज्ञानानि भवन्ति " इति । तेन स्वतः सिद्धज्ञानः स्वप्रकाशः । अन्येषां तु तदधीनप्रकाशतया न स्वप्रकाशता । तेने ब्रह्मेत्यादिपदपञ्चकेन धियो यो नः प्रचोदयात् इति
वाक्यस्यार्थ उक्तः । यो हि ब्रह्मणोऽपि वेदप्रदानेन प्रज्ञां प्रावर्तयत् स एव सर्वेषामस्माकं जीवानां बुद्धिवृत्तीः प्रवर्त्तयति न त्वन्य इति वाक्यार्थः । धीमहीति तुल्यमेव ।
अत्र श्लोके सर्गादीनि दशलक्षणान्यपि दर्शितानि । तथाहि जन्माद्यस्य यत इत्यनेन सर्गविसर्गस्थानानि तृतीयचतुर्थपञ्चमस्कन्धव्युत्पाद्यानि सूचितानि । तेने ब्रह्म हृदा य ॥ १ ॥
आदिकवय इत्यनेन भक्तानुग्रहलक्षणं पोषणं षष्ठस्कन्धव्युत्पाद्यं सूचितम् । मुह्यन्ति यत् सूरय इत्यनेन कर्मवासनारूपा ऊतिः सप्तमस्कन्धव्युत्पाद्या सूचिता । मन्वन्तरेशा-
नुकथे अष्टमनवमस्कन्धप्रमेये स्थानमध्ये एवान्तर्भूते तेजोवारिमृदां विनिमय इत्यनेन निरोधो दशमस्कन्धार्थो दर्शितः । धाम्ना स्वेन सदा निरस्तकुहकमित्यनेन मुक्तिरेका-

दशस्कन्धार्थो दर्शितः । सत्यं परमित्यनेनाश्रयो द्वादशस्कन्धार्थो दर्शितः । धीमहीत्यात्मनेपदोत्तमपुरुषप्रयोगादधिकारी प्रथमस्कन्धार्थः । तेनैव ध्यानोपलक्षितसाधनानुष्ठानरूपो द्वितीयस्कन्धस्यार्थः । इति कृत्स्नभागवतार्थसूचनम् । धीमहीति तत्पदार्थत्वंपदार्थतदैक्यकथनद्वारेण शास्त्रस्य विषयो दर्शितः । तत्र श्रवणं मननं च कृतवतस्तृतीयं निदिध्यासनमिह प्रतिपाद्यते । मननवतो विजातीयप्रत्ययनिवारणस्य मनोनिग्रहद्वारा व्युत्पाद्यमानत्वात् चतुर्लक्षणमीमांसारूपत्वं चास्य सूचितम् । तथाहि पूर्वार्द्धेन जन्माद्यस्य यत इति न्यायः साक्षादेव दर्शितः । अन्वयादित्यनेन तत्तु समन्वयादिति । अर्थेष्वभिज्ञ इत्यनेन ईक्षतेर्नाशब्दमिति । तेने ब्रह्म हृदेत्यादिना शास्त्रयोनित्वादिति । मुह्यन्ति यत् सूरय इत्यनेन एतेन सर्वे व्याख्याता इत्यन्तो न्यायकलापः सूचित इति समन्वयाध्यायो व्याख्यातः । तेजोवारिमृदामित्यादिना तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिन्यायसूचनादविरोधाध्यायार्थः । धीमहीत्यनेन सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यादिन्यायसूचनात् साधनाध्यायार्थः । धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परमिति फलाध्यायार्थः । अविद्या तत्कार्यनिवृत्त्युपलक्षितपरमानन्दरूपावशेषात् एवं सति पारमहंसी संहितेति समाख्योपपद्यते । परमहंसानां वेदान्तवाक्यार्थनिदिध्यासनपरत्वात् अत्रत्योपाख्यानानां तत्तात्पर्य्यकत्वात् । अत्र स्वरूपतटस्थलक्षणादिकं टीकावशेषभागे स्फुटयिष्यत इति प्रथमोऽर्थः। अत्र सात्वतास्तु वर्णयन्ति। पञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिचिदाभासविराड्जीवान्तर्य्यामिरूपम् ओत इत्यनिरुद्ध इति चाख्यायते । एवमपञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिचिदाभासहिरण्यगर्भान्तर्यामिरूपम् । अनुज्ञात इति प्रद्युम्न इति चाख्यायते । एवं स्थूलसूक्ष्मभूतकारणीभूतं यन्मायात्मकम् अव्याकृतं तदुपहितं शुद्धचैतन्यं तन्निष्ठचिदाभासोपलक्षितम् अनुज्ञात इति संकर्षण इति चाख्यायते । अनुपहितं तु चैतन्यं सर्वानुस्यूतसन्मात्रं सर्वसाक्षिपरमानन्दघनम् अविकल्प इति वासुदेव इति चाख्यायते । संकर्षणप्रद्युम्नानिरुद्धानामपि वासुदेवत्वं वर्तत एव । उपाधिकृतः केवलं नामविशेषः । अत्र वासुदेवः परमात्मा संकर्षणो जीवः प्रद्युम्नो मनः अनिरुद्धोहंकार

---

जन्माद्यस्येत्यादीनि ब्रह्ममीमांसासूत्राणि संक्षेपतो व्याख्यायन्ते । १ यतोऽस्य जन्मादि जन्मस्थितिभङ्गं भवति तद्ब्रह्म । २ तद्ब्रह्म वेदान्तशास्त्रादवगम्यते । कुतः समन्वयात् सम्यगन्वयात् उपक्रमादिषड्विधतात्पर्यलिङ्गात् । ३ साङ्ख्यकल्पितं प्रधानं जगत्कारणं न भवति यतस्तदशब्दं वेदाप्रतिपाद्यम् । अशब्दत्वं कुतः ईक्षतेः वेदे 'तदैक्षत बहुस्याम्' इति ईक्षितृत्वश्रवणात् । ४ शास्त्रस्य वेदस्य योनिः कारणं ब्रह्म तस्मात् सर्वज्ञं ब्रह्म । यद्वा शास्त्रं योनिः प्रमाणं यत्र तादृशत्वाज्जगत्कारणं ब्रह्म । ५ एतेन प्रधानकारणवादनिराकरणेन सर्वे परमाणुकारणवादादयः प्रतिषिद्धतया व्याख्याताः । ६ कार्यस्य तस्मात् कारणात् अनन्यत्वम् अभेदो ज्ञेयः । कुतः आरम्भणशब्दादिभ्यः वाचारम्भणं विकारो नामधेयम् 'ऐतदात्म्यमिदं सर्वम्' इत्यादिप्रामाण्यात् । ७ बृहदारण्यके पाण्डित्यशब्दवाच्यं श्रवणं बाल्यशब्दवाच्यं मननं च विधाय मौनाख्यं निदिध्यासनं श्रूयते । तत्र सूत्रम् । पाण्डित्यबाल्यापेक्षया तृतीयं यन्मौनं तस्य सहकार्यन्तरस्य मौनस्य विधिरेवाश्रवणीयः कुतः तद्वतः विद्यावतः संन्यासिनः मौनाधिकारात् । तच्च पक्षेण । यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिः विध्यादिवत् । यथा 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ यथा अग्न्याधानादिकं विधीयते तद्वत् ।

इति प्रक्रिया तु नादरणीया तद्वचनविरोधात् श्रुतिविरोधाच्चेत्याद्युत्पत्त्यसंभवादित्यधिकरणे व्याख्यातम् । एवंस्थिते श्लोकयोजना । अन्वयात् कार्यमात्रेऽन्वितात् इतरतः पृथगपि स्थितात् । यतः अस्य ब्रह्माण्डस्य जन्मादि भवति यश्चार्थेष्वभिज्ञः सर्वज्ञः यश्च प्रोतसंज्ञः अनिरुद्धाख्यः स्वराट् ब्रह्माण्डावच्छिन्नचिदाभासो हि विराड् जीवः अयं तु तद्बिंबभूतस्तदन्तर्यामी स्वयमेव राजत इति स्वराट् बिम्बभूतत्वेन अन्यानपेक्षत्वात् । यश्च अनुज्ञातसंज्ञः प्रद्युम्नाख्यः । आदिकवये सूक्ष्मभूतावच्छिन्नचिदाभासाय हिरण्यगर्भसूत्रादिसंज्ञकाय जीवाय ब्रह्म वेदं तदन्तर्यामिरूपेण बिम्बभूतो यस्तन्मनसैव तेने इति हिरण्यगर्भवैलक्षण्यं स्पष्टमेवोक्तम् । यत् यत्र त्रिगुणात्मकमायाप्रतिबिम्बस्य जगत्कारणस्य बिम्बभूते सर्वान्तर्यामिणि संकर्षणाख्ये सूरयोऽपि मुह्यन्ति भ्राम्यन्ति । स्थूलसूक्ष्मप्रपञ्चद्वयं भ्रान्त्या कल्पयन्ति प्रधानपरमाण्वादिरूपेण वा भ्राम्यन्ति यत्र च वासुदेवाख्ये तेजोवारिमृदां यथा विनिमयः तथा । त्रिविधः सर्गः त्रिसर्गः आध्यात्मिक आधिभौतिक आधिदैविकश्चेति स यत्र मृषा सर्वथा असन्नेवेत्यर्थः । अपह्नववचनो मृषाशब्दः त्रयाणामनिरुद्धप्रद्युम्नसंकर्षणोपाधीनां सर्गः संसर्गो यत्र मृषेति वा तदेवमनुपहितत्वेन स्वेन धाम्ना सदा निरस्तं कुहकं निवृत्ता विद्या तत्कार्यं बिम्बभूतत्वेनोपाधितद्धर्मैः रसंस्पृष्टम् । अतएव परं सत्यं वासुदेवाख्यं ध्यायेमेति निर्गलितोर्थः । अत्रानिरुद्धपुरुषावतारो नारायणः प्रलयोदकशायी भुवनकमलमूलभूत इति । अथ सविशेषब्रह्मपक्षः तत्त्वं च अप्राकृतसत्वादिगुणवत्त्वं । अनन्तकल्याणगुणपूर्णत्वं च तत्र पूर्वार्द्धं समानमेव । उत्तरार्द्धे तु ननु ध्यानविषयत्वेन साकारताभिप्रेता आकाराणां च त्रिगुणसृष्टत्वेनानित्यत्वप्रसक्तिरित्यत आह तेज इति । यथा अज्ञानाम् तेजसि वारीदमिति वारिणि स्थलमिति मृदि काचादौ च वारीदमिति बुद्धिः तथैव यत्र पूर्णचिन्मयाकारे त्रिसर्गः त्रिगुणसर्गोयमिति बुद्धिर्मृषैवेत्यर्थः । सच्चिदानन्दविग्रहत्वेन साकारत्वेप्यनित्यत्वाभावात् । ननु तत्रापि केचिद्विवदन्ते इत्यत आह धाम्ना स्वरूपशक्त्या निरस्ताः कुहकाः कुतर्काः येन तम् । "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।" इति वचनात् । अयमर्थः सर्वेषां वैष्णवानामनुकूलः । अथवा सविशेषं ब्रह्म श्रीकृष्णाख्यं श्रीभागवते तस्य मुख्यतया प्रतिपादनात् अतस्तत्परतयाऽपि व्याख्यायते । अस्य श्रीभगवतो यतो यत्र वसुदेवगृहे जन्मादि आदिशब्देन ऐश्वर्यप्रकटनपूर्ववृत्तकथनादिकं ततः इतरतश्च इतरत्र नन्दगृहे स एवायं भगवान् अनु अयात् अगच्छत् । यश्च भगवान् अर्थेषु कंसवधव्रजवात्सल्यादिषु अभिज्ञः । स्वराट् स्वतन्त्रः यश्च आदिकवये ब्रह्मणे हृदा संकल्पमात्रेणैव ब्रह्म ब्रह्मात्मकं वत्सबालकादि तेने प्रकाशयामास । यत् यत्र योगमायावैभवे सूरयोभवनारदादयोऽपि मुह्यन्ति । यथा लौकिकदेहेषु तेजोवारिमृदां तेजोजलभूमिरूपाणां तेजोबन्नाख्यानां दृश्यभूतानाम् उपलक्षणतया वाय्वाकाशयोरपि च विनिमयः परस्परमेलनम् । यथा यथावत् सत्यरूपोस्ति तथा यत्र भगवति त्रिसर्गः त्रिवृत्करणेन देहसर्गः त्रिभिर्गुणैः सर्गो वा अनभिज्ञैः मृषैवोच्यते । भगवद्विग्रहस्य चिदेकरूपस्य भूतसृष्टत्वाभावात् । भगवद्विग्रहस्य दृश्यत्वं तु भगवदिच्छयैव अतएव भागवतामृतधृतनारायणाध्यात्मवचनं "नित्याव्यक्तोपि भगवानीक्ष्यते निजशक्तितः । तामृते परमानन्दं

कः पश्येतामितं प्रभुम् ॥" इति तत्रत्या कारिका च ततः स्वयंप्रकाशत्वशक्त्या स्वेच्छाप्रकाशया सोऽभिव्यक्तो भवेन्नेत्रे न नेत्रविषयत्वतः इति । स्वेन धाम्ना श्रीमथुराख्येन सर्वत्र तदानीं कृपया दर्शितेन श्रीविग्रहेण च सदा निरस्तं कुहकं जीवानामविद्या येन तं परं सत्यं सद्भ्यो हितं श्रीकृष्णं धीमहीति । अथ भक्तियोगपक्षः । यतो भक्तियोगात् आद्यस्य भगवतो जन्म भक्तकर्तृकदर्शनार्थं प्रादुर्भावः तथा इतरतः इतरेष्वर्थेषु निष्कामकर्मयोगज्ञानयोगेष्वन्वयात् यत्साहित्याच्च आद्यस्य जन्म उपासकेषु परात्मत्वेन ब्रह्मत्वेन च साक्षात्कारो भवेत् इत्यन्वयः । यतोऽयं भक्तियोगः ज्ञानयोगादिषु अपि अभितः सर्वभावेन ज्ञायते इत्यभिज्ञः । " घञर्थे कविधानम् " इति स्थादिभिन्नेष्वपि दर्शनात् कर्मणि कः । अभितो ज्ञा ज्ञानं यस्य इति वा आर्षो वा प्रयोगः । ज्ञानयोगादेर्भक्तियोगं विना अकिञ्चित्करत्वात् " नैष्कर्म्यमप्यच्युतभाववर्जितम् " इत्याद्युक्तेः । भक्तियोगस्तु स्वराट् स्वतन्त्रः तत्र भगवत्कृपया स्वयमेवापरोक्षज्ञानोदयात् । " अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥" इति विधिवाक्यात् । तथा " यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ॥ " इत्यादिवाक्याच्च यश्च भक्तियोगः ब्रह्म हृदि यस्य ब्रह्मणि हृद्यस्येति वा । तेन ब्रह्महृदा नारदेन आदिकवये व्यासाय तेने कृपया प्रकाशितः । यत् यत्र सूरयो वसिष्ठादयोऽपि मुह्यन्ति । यत्र त्रिसर्गः सत्वादिगुणभेदात्त्रैविध्यं मृषा अवास्तवः । वस्तुतः भक्तेर्गुणातीतत्वात् यथा दुग्धादौ तेजोवारिमृदां विनिमयो मेलनं निस्तेजोपि निर्जलमपि निर्धूलिकमपि दुग्धं तप्तमिति जलवदिति मलिनमिति तत्तन्मेलनाद्भवति तथैव त्रिगुणातीतो भक्तियोगः पुरुषवर्तिसत्वादिगुणयोगात् सात्विको राजसस्तामसश्चोच्यते । न चात्र प्रमाणाभाव इति शंक्यम् । स्वेन धाम्ना स्वस्वरूपेणालौकिकमाधुर्य्यमयेन भक्तानामनुभवगोचरीभूतेनैव निरस्ताः कुहकाः कुतर्कवन्तो येन तं न ह्यनुभूयमानेऽर्थे प्रमाणापेक्षेति भावः । तं सत्यं सतां हितं परमुत्कृष्टं निर्गुणं भक्तियोगं धीमहि । अथ ज्ञानयोगपक्षः । तत्र वस्तुतो ज्ञानं परमात्मैव तत्परतया त्वादिपक्षो व्याख्यात एव । परंत्वत्र ज्ञानयोगः साधनरूपः साधनचतुष्टयसंपत्तेरारभ्य वेदान्तश्रवणमनननिदिध्यासनादिरात्मसाक्षात्कारपर्य्यन्तो व्यापारः यतो यत्र ज्ञानयोगे आदौ अन्वयात् अध्यारोपात् इतरतः अपवादाच्च हेतोः अस्य जगतो जन्मादि वर्ण्यते अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यत इत्युक्तेः । अग्रे च यः सर्वेष्वर्थेष्वभिज्ञः कारणरूपपरब्रह्मज्ञानेन कार्यमात्रस्य वेदयिता । यथा सोम्यैकेन मृत्पिण्डेन ज्ञातेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिश्रुतेस्तथाप्रतिपादकः । अन्तर्भावितण्यर्थोऽत्र जानाति यश्च स्वराट् कर्माद्यनपेक्षः मुख्यो वा यश्च ब्रह्महृदा ब्रह्मणा आदिकवये नारदाय तेने प्रकाशितः । यद्वा छान्दोग्यसप्तमप्रपाठके सनत्कुमारेण नारदाय प्रकाशितः । यद्वा कठवल्लीषु यमेन नचिकेतसे प्रकाशितः आत्मसाक्षात्कारे जाते तु यथा तेजोवारिमृदां तेजोजलभूमिरूपाणां भूतानां विनिमयो मेलनं त्रिवृत्करणं शास्त्रे वर्णितमपि वास्तवाभावान्मृषा तथा यत्र त्रयाणां श्रवणमनननिदिध्यासनानां सर्गः आत्मसाक्षात्कारे मुख्योपकारकोपि वस्तुतो मृषैव । स्वेन धाम्ना स्वरूपसाक्षात्कारेण सदा निरस्तं कुहकं माया तत्कार्यं च येन तम् सत्यं सद्भ्यो मुमुक्षुभ्यो हितं परं प्रकृष्टं साधनं ज्ञानयोगं

धीमहि । अथ निष्कामकर्मयोगपक्षः । यतो निष्कामकर्मणः अन्वयादितरतश्चान्वयव्यतिरेकाभ्याम् अर्थेषु चतुर्षु पुरुषार्थेषु आद्यस्य प्रथमपुरुषार्थस्य धर्माख्यस्य जन्म भवति यश्च अभिज्ञः अभिलाषिणो ज्ञा विद्वांसो यस्मिन् सः " मादिभ्यो धातुजस्येति " बहुव्रीहिः । तथा यः स्वराट् मुख्यपुरुषार्थमोक्षोपकारकत्वात् प्रथमत्वाच्चेति यश्च ब्रह्महृदा जैमिनिना आदिकवये मुख्यधीमते स्वशिष्याय तेने । यत् यत्र च सूरयोपि मुह्यन्ति यत्र च कर्मयोगे होमादिषु तेजोऽग्निः वारि जलं मृच्छब्देन पार्थिवं हविरादि तेषां यथा यथावत् मंत्रादिपूर्वकं विनिमयः उपयोगो भवति । यत्र च नित्यनैमित्तिकरूपे द्विविधे तृतीयस्य काम्यस्य सर्गः करणं त्रिसर्गः मृषैव अनुचित एव नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयमिति मोक्षे द्विविधस्यैवोपयोगात् । संख्याशब्दानां वृत्तौ त्र्यंशादौ पूरणपरत्वम् । स्वेन धाम्ना धर्माख्यापूर्वेण निरस्तं कुहकं कामनारूपं येन तं परं सत्यं निष्कामकर्मयोगं धीमहीति । श्लोकद्वये शार्दूलविक्रीडितं छन्दः ॥ १ ॥ एवं परमेश्वरमनुस्मृत्याविर्बिभावयिषितस्य श्रीभागवतस्य सर्वशास्त्रेभ्यः श्रैष्ठ्यमनुबन्धचतुष्कदर्शनमुखेन दर्शयति–धर्म इति ॥ महामुनिः श्रीनारायणः तेन प्रथमं संक्षेपतः चतुःश्लोकीरूपेण ततो विस्तरेण च कृते प्रकाशिते अत्र अस्मिन् श्रीमति परमसुंदरे भागवते प्रोज्झितं प्रकर्षेण उज्झितं कैतवं कपटं फलाभिसंधिरूपं यस्मिन् सः प्रशब्देन मोक्षाभिसंधिरपि निरस्तः । निर्मत्सराणां परोत्कर्षासहनं मत्सरस्तद्रहितानां

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २ ॥

द्रहितानां सतां शिष्टानां परमः ईश्वराराधनलक्षणः धर्मः निरूप्यते । अत्र शिष्टा अपि काम्ये कर्मणि प्रवर्त्तमानाः क्वचिन्मत्सरमवलम्बन्ते तद्व्यावृत्त्यर्थं निर्मत्सराणामिति । तथा अत्र शिवदं परमसुखप्रदं तापत्रयस्य आध्यात्मिकादिकस्य उन्मूलनं नाशकं वास्तवं परमार्थभूतं वस्तु वेद्यं यद्वा वास्तवशब्देन वस्तुनोंशो जीवो वस्तुनः शक्तिर्माया वस्तुनः कार्यं जगच्च तत्सर्वं वस्त्वेव न ततः पृथगिति वेद्यम् । त्रयस्तापाश्च आध्यात्मिक आधिभौतिक आधिदैविकश्च । तत्राध्यात्मिको द्वेधा शारीरो मानसश्च । आद्यो ज्वरादिजः द्वितीयः शोकादिजः । आधिभौतिको मानुषपश्वादिजः आधिदैविको यक्षभूतादिजः । परैः शास्त्रैः तदुक्तसाधनैर्वा ईश्वरो हृदि किंवा सद्य एवावरुद्ध्यते स्थिरीक्रियते । वाशब्दः कटाक्षे । किंतु विलम्बेन कथंचिदेव । अत्र तु कृतिभिः पुण्यशालिभिः शुश्रूषुभिः श्रोतुमिच्छद्भिरेव तत्क्षणादेवावरुद्ध्यते । यद्वा अत्र ईश्वरः कृतिभिः शुश्रूषुभिः सद्यस्तत्क्षणादेव हृद्यवरुध्यते अतः परैः शास्त्रैः किं वा साध्यमिति । अत्र महामुनिकृते इति कर्तृतः श्रैष्ठ्यम् । धर्मः प्रोज्झितकैतव इति कर्मकाण्डेभ्यः निर्मत्सराणामित्यधिकारितः वेद्यं वास्तवमित्यादिना ज्ञानकाण्डशास्त्रेभ्यः चतुर्थपादेन देवकाण्डशास्त्रेभ्यः श्रैष्ठ्यं दर्शितम् । अत्र परमात्मरूपं वस्तु विषयः । तापत्रयोन्मूलनं प्रयोजनं सन्तोधिकारिणः विषयप्रयोजनयोः प्रतिपाद्यपादकभावः सम्बन्धः । इत्यनुबन्धा दर्शिताः । अन्यत्र शास्त्रे ईश्वरे मनो निरुध्यत इत्येव पुरुषार्थः ।

